द्यादिमंत्रसागरेसर्वेदेवीध्यानर्निणयोनामसप्तमःकल्पः ७ ॥ समाप्तोयंमुद्धारकोशाख्यःतंत्रःसमाप्तं सम्पूर्णम् ॥ शुभंमस्तु ॥ श्रीरस्तु ॥ शुभम् ॥ सम्वत १८२४ चैत्रसुक्ल ५ भौमवासरे ॥ शुभम्

| | | | | |
|---|---|---|---|---|
| [illegible] | उद्धारकोषः or बीजोद्धारकोषः | दक्षिणामूर्त्तिमुनिः | तन्त्रम् | " Benares Edition |

दं ४१ रुद्रयामले० मालांकुशपद्मयुग्मकधरां सहस्रनेत्रांकितां मत्तैरावणपृष्ठगां शशिमुखीं त्रैलोक्यरक्षा
परां दोर्भिर्गीतरतां सरोजसदृशीं ब्रह्मादिदेवैः स्तुतां मिन्द्राक्षीं जनमातरं हृदि भजे कारुण्यविद्रूपिणीं ४२ भै
रवतंत्रे० विनिद्रकमलोत्पलैर्मुनिरचितां घ्रिंहृष्यीं सितांसितकराननां सितकरोज्वलच्छेखरां खेचरिं
लोन्नतां नभपुस्तकौ बिभ्रतीं स्मरामि हृदि खेचरीं भुवनमातरं सिद्धिदां ४३ ईश्वर उवाच० इत्यासां देवदेवीनां
मंत्रध्यानवपुस्मृतम् यस्य कस्य न दातव्यं तंत्रमुद्धारकोशकं ४४ ऋषय ऊचुः धन्यः स त्वं पुत्रस्त्वं सकला
गमपारगः भजे त्वां स्वाश्रमं [illegible]तुं मां त्वं पालयितुमर्हसि ४५ दक्षिणामूर्तिः गच्छध्वं मुनयः सर्वे त्वमध्वं हे पराम
म इत्युक्त्वा स्वाश्रमं जग्मु मुनयो मंत्रतोषिताः ४६ ईश्वर उवाच दक्षिणामूर्तिना तेन दृष्ट्वा तं त्रानमनोरमान् कृ
तमुद्धारकोशाख्यं तंत्रं तंत्रैकसागरं ४७ गोप्यं गुह्यं महादेवि मंत्रकोशसमन्वितं तव प्रीत्या न [illegible]तं गोपनीयं
स्वयोनिवत् ४८ देव्युवाच कांतास्मि भवतानेन तंत्रेणाहं सुरेश्वर इत्युक्त्वा सहसा कुंजं कैलासा[illegible]: प्रजग्म
तुः उभौ ताववंबिका दुर्गा देवी देवश्च शंकरः ४९ ॥ इति श्रीदक्षिणामूर्तिमुनिविरचितउद्धारकोशतंत्रे दशवि

शी॰को॰ भैरवतंत्रे॰ तेजोमयंशक्तित्रिशूलहस्तंसुरेन्द्रसंसेवितपादपद्मं मेधानिधिंमत्तगतंद्विबाहुंगुरुंहेरम्बंमानसपंकजे
२० हं ३४ आगमोद्योते शंखप्रभंवेणुप्रियंशशांकं ईशानमौलिस्थितमीड्यरूपं नमीपतिंचामृतसिक्तगात्रं ध्या
येहृदब्जेशशिनंमहेशं ३५ आगमामृतमंजर्यां प्रतप्तगांगेयनिभंमहेशंसिंहासनस्थंक[illegible]हस्तं सुरासु
रैःपूजितपादयुग्मंभौमंदयालुंहृदयेस्मरामि ३६ आगमामृते नीलांजनाभंमिहिरेष्टपुत्रंग्रहेश्वरंपाशभुजंगपा
णिं सुरासुराणांभयदंद्विबाहुंस्मरेशनिंमानसपंकजेहं ३७ वामकेश्वरे शीतांशुमित्रांतकमीड्यरूपंघोरंच
वैडूर्यनिभंद्विबाहुं त्रैलोक्यरक्षापरमिष्टदंतंराहुंग्रहेन्द्रंहृदयेभजेहं ३८ आगमोद्योते॰ लांगूलयुक्तंभयदं
जनानांकृष्णांबुभृत्संनिभमेकवीरं कृष्णांबरेशक्तित्रिशूलहस्तंकेतुंभजेमानसपंकजेहं ३९ कुलचूडामणौ॰ नाग॰
भूरिशंखकृपाणखेटबाणान्सधनुःशूलकतर्जनींदधाना भयदांमहिषोत्तमांगसंस्थांनवदूर्वासदृशांभजेभ २०
वानीं ४० आगमामृतमंजर्यां नानारत्ननिवहरम्यरसनांपीतांबराभायदांवर्माश्वग्निशशांकसूर्यनयनांसिं
हासनस्थांपराम् सद्गांगेयनिभांमहार्घमणिभिरुद्भासितांगींसदा देवेशींबगलामुखींहृदिभजेभक्ता[illegible]भक्ति

राजमध्यस्थितंस्मरामिभुवनाधिपंहृदितुकार्तवीर्यार्जुनम् २६ कुब्जासर्वस्वे॰ चन्द्रार्द्धासितमूर्द्धजस्रवत्पीयूष
पात्रंवहंतं हस्ताब्जेनसुधांशुकोटिविमलंहास्यास्यपंकेरुहं सूर्याग्नींदुविलोचनंकरतलैः पाशाब्जस्रजं कुंभं सं
जानुंबिभ्रतमस्यंपशुपतिंमृत्युंजयंभावये २७ कुलचूडामणौ बालंषोडशहायिनंकपिपतिंवह्निप्रभाभासुरं दो
र्भिर्धृतगदाधनुःशरचपाशंबिभ्रतंसादरं वंदेदेवस्वरूपिणंरघुपतिं चाराधयंतंमुदा ध्यायेहं [illegible]तमर्कनयनं
सुग्रीवदेवंहृदि २८ कुलार्णवे॰ ग्रामेषु[illegible]कवीरं प्रवंगराजेंद्रकृतप्रणामं सुमेरुशृंगागमचित्तमाद्यंह
दिस्मरेहंहनुमंतमीड्यं २९ भैरवतंत्रे कपालहस्तंभुजगोपवीतंकृष्णच्छविंदंडधरंत्रिनेत्रं अचिंत्यमाद्यंमधु
पानसक्तंहृदिस्मरेभैरवमिष्टदंतं ३० त्रिपुरासर्वस्वे प्रत्यक्षदेवंविशदंसहस्रमरीचिभिःशोभितभूमिदेशं सप्ता
श्वगंसद्ध्वजहस्तमाद्यंदेवंभजेहंमिहिरंहृदब्जे ३१ भैरवतंत्रे सोमात्मजंहंसगतंद्विबाहुं शंखेन्दुरूपंह्यसिपाश
हस्तं दयानिधिंभूषणभूषितांगं बुधंस्मरेमानसपंकजेहं ३२ कुब्जासर्वस्वे संतप्तकांचननिभंद्विभुजंदयालुं
पीतांबरंधृतसरोरुहद्वंद्वशूलं क्रौंचासनंमसुरसेवितपादपद्मं शुक्रंस्मरेत्रिनयनंहृदयांबुजेहं ॥ ३३ ॥

तंवराहीं १८ शारदापटले षड्भुजां त्रिनयनां स्मिताननां शांडिल्येन नमितां प्रियपंकजां पर्वतस्थितांबरां ध्वजत्रशूलां
शारदां भगवतीं हृदि ध्याये १९ त्रिपुरासर्वस्वे॰ त्रिलोचनां सूर्यसहस्रशोभां सिंहासनस्थां द्विभुजां ध्वजासिम् ॥
पीतांबरां विष्णुमहेशसेव्यां कामेश्वरीं तां हृदये स्मरामि २० भैरवतंत्रे गौरांगीं ध्वजपंकजां त्रिनयनां श्वेतांबरां
सिंहगां चंद्रोद्भासितशेखरां स्मितमुखीं दोर्भ्यां वहंतीं गदां विह्विंद्राम्बुजयोनिकामत्रिपुशेः संपूजितांघ्रिद्व
यीं गौरीमानसपंकजे भगवतीं भक्तेष्टदां तां भजे २१ भैरवतंत्रे चन्द्रार्द्धमौलिं द्विभुजां त्रिनेत्रां फुल्लाब्जमालैस्त
तं वहंतीं एणासनस्थां भुजगोपवीतां तां मातृपूर्णां हृदये स्मरामि २२ आगमामृतमंजरीतंत्रे त्रिशूलासिधरां
दोर्भ्यां रक्ताभां बहिरूपिणीं अग्नौ सिंहासनगतां कुलवागीश्वरीं भजे २३ आगमार्णवपीयूषे हे चतुर्दशाव
र्णभूषितांगं शशिसूर्याग्निविलोचनं करेशं अहिभूषितकंठमत्तसत्वंभ्रमपं तं हृदये गणेशं २४ आगमप्रोते ॥
हिमाद्रिस्थितं द्विभुजं भुजंगपरेतगात्रे शिखिविविष्टरस्थं नगेंद्रकन्याप्रियपुत्रमाद्यं हृदि स्मरे[illegible]नारि २५ ॥
उड्डामरतंत्रे सहस्रभुजमंडलीजितनमीचरेशाधिपं हिमांशसदृशाननं ष्ठसहस्रतृणीकरम सितांवरधरं सुरांतुग

सूर्येंदुग्निविलोचनांशिवसुखींप्रेतासनेसंस्थितां ब्रह्माद्यैःसुरसंचयैःप्रणमितांदेवींभजेहंतुरीयं १२ त्रिपु
रशिरोमणौ ॥ एणांकांशुपरेतभालफलकांबालार्ककोटिप्रभां ज्वालावहुमहार्घरत्ननिरूपांकेयूर[illegible]ज्वलां
खड्गासंकुशपाशवेणुमुशलांभोजाभयान्बिभ्रतीं भक्तेष्टांछिन्नमस्तिकांभगवतींध्यायेहृदब्जेसदा १३ ॥
कालीरहस्ये ब्रह्माविष्णुशिवास्थिमुंडरसनांतांबूलरक्ताधरां वर्षामेघनिभांत्रिशूलमुशलौपद्मासिपाशां
कुशान् शंखासाहिधनुर्गणान्दधतींदशभुजांप्रेतासनेसंस्थितां देवींदक्षिणकालिकांभगवतींरक्तांवरांतांस्मरे
१४ श्यामातंत्रे त्रैलोक्यपूजितपदांबुरुहद्वयीतांकृष्णांवृमस्वदृशरूपधरांत्रिनेत्रां खड्गासिशंखमहतीः
स्वभुजैर्वहंतीं श्यामांस्मरेशवशरीरकृतासनस्थां १५ वामकेश्वरे० खड्गाब्जपाशांकुशहस्तपद्मांचतुर्भु
जांधूम्रनिभांत्रिनेत्रां ॥ सिंहासनस्थांधृतपीतवस्त्रांध्यायेमहेशींहृदिकालरात्रिं १६ कुलार्णवे० ॥४
इंदग्निसूर्यनयनांपाशांकुशधरांशिवाम् द्विभुजांसिंहमध्यस्थांभजेहंवज्रयोगिनीं १७ कुलचूडामणौ०
चंद्रार्द्धचूडांविमलांभुजाभ्यांखड्गांकुशौ स्मेरमुखीं[illegible]

वी०को० सहस्रमरीचिदीप्तिं श्रीशारिकां त्रिनयनां हृदये स्मरामि ८ वामकेश्वरे शीतांशुबालार्ककृशानुनेत्रां चतु
१८ र्भुजामेणत्वगासनस्थां शंखाब्जशूलासिधरां महेशीं राज्ञीं भजेहं तुहिनाद्रिरूपाम् ९ आगमोत्तरे० ॥
उद्यच्छीतांशुरश्मिद्युतिवपुसदृशीं फुल्लपद्मोपविष्टां वीणानागेंद्रशंखायुधपरशुधरां दोर्भिरीड्यैश्चतुर्भिः
॥ मुक्ताहारांशुनानामणियुतहृदयां सीधुपात्रं वहंतीं वंदे श्रीडाभवानीं प्रहसितवदनां साधकेष्टप्रदात्रीं १० ॥
ज्वालाशिरोमणौ ज्वालापरीतास्यसरोरुहां त्रा सरोजशंखासिगदाधरां च सिंहासनेस्थापितपादयुग्मां ज्वा
लामुखेंसहृदये स्मरामि ११ वामकेश्वरे भुक्त्यै विश्वस्यकर्तुः करकमलतले धारयंतीं हसंतीं नाहंत्वज्ञावदं राम०
तीं सकलजनवयंभक्तपंतीं सदैव श्यामां विद्युं गिरीशं रिपुकुलमथनं दोर्भिरीड्यैर्दधानासिं ध्यायेहं भद्रका १८
लीं नवजलदनिभां प्रेतमध्यासनस्थाम् १२ आगमामृते० नानारत्ननिरुद्धचंद्रशकलां मौलौ [illegible] भि
न्नते ॥ पाशांभोजधरां हिमांशुधवलां दोर्भ्यां प्रसन्नां शिवाम् ॥ ॥ ॥ ॥

पुराम्भजेहम् २ रुद्रयामले० लक्ष्मीपद्मासनगतकटिं सूर्यशीतांशुनेत्रांमुद्यद्धास्वत्करत्वमहविपद्मशंखासिपा
णिं नानासुक्तामणिसुशकलाभूषितांगांहिबाहुं नित्यंलोकत्रिनयनफलदां नौम्यहंभक्तिपूर्वं ३ मैवमुक्तावलौ०
बाणौपूर्णनिशाकरोज्वलसुखींकर्पूरकुंदप्रभांचंद्रार्द्धांकितमस्तकांनिजकरैः संविभ्रतीमादरात् वर्णमल
गुणंसुधाद्यकलशंविद्यांचतुंगस्तनी दिव्येराभरणेर्विभुषिततनुंसिंहाधिरूढांभजे ४ भैरवतंत्रे० देवींप
त्नगभूषितांहिमरुचिंशीतांशुशंखप्रभां मुक्ताखलपरीतकंठवलयांरक्तांवराणविभ्रतीं शूलाजासिगदाध
रांसुरगणैर्वैकुंठमुख्यैःस्तुतां नित्यंलोकत्रयैकरक्षणपरांताराःत्रिनेत्रांभजे ५ रुद्रयामले० उद्यद्दिनेशद्यु
तिमिन्दुकिरीटांतुंगकुचांनयनत्रययुक्तां स्मेरमुखींवरदांकुशपाशांभोजकरांप्रभजेभुवनेशीम् ६ कुब्जिका
सर्वस्वे चंद्रार्द्धांकितशेखरांत्रिनयनांकोटिंदुसूर्यप्रभां नानारत्नसहस्रबद्धरसनांपेतासनेसंस्थितांम् ॥
शंखंतोमरपट्टिशाब्जयुगलां दोर्भिर्वहंतीमुदा ध्यायेहंहृदयेसदाभगवतींमातंगिनींहारिणीं ७ ॥ ९ ॥
ऽश्रागमामृतमंजर्यां श्रीपूर्णखचक्रमुशलांकुजयुग्महस्तां नागेन्द्रहारवलयांकितकंठमालां सिंदूरकुंकुम

वी०को० खंपुष्कं तथा म्लौं बीजानि मयैतानि स्मृतानि हृतिमं परं १५ प्रकाशं ॐ क्रों क्रीं हूं हूं म्लौं ह्रीं श्रीं ऐं इन्द्राक्षि वज्र

१७ हस्लें सीं ह्रीं म्लौं हूं हूं क्रीं क्रीं ॐ ऐं फट् स्वाहा इति मूलं त्रिखण्डा नामयाख्याता वामा भुवनदेवता: दक्षिणामूर्ति·

रूपेण संसारेऽपि प्रकाशिता: १७ अथेहि देवदेवेशि खेचर्या वच्मि वै मनुम् यमासाद्य लभेद्योगी खेचरीसिद्धि

टांकलो १८ विश्वयामले० गीर्वाणादशमं वर्णं चोद्धरेत्प्रतिलोमत: ततो बीजं ततो दद्यान्मायाबीजं ततः स्मृतं०

१९ ततो दद्यात्क्षुरद्बीजं कूटोऽयं परिकीर्तितः मंत्रं तुर्यं शिरो ज्ञेयं योगो दद्यात्ततोऽभिधम् २० खेचर्यै च ततो

दद्यादन्ते चोष्मकमेव च प्रकाशं म्लीं खेचर्यै नमः इति मूलम् अथ वक्ष्यामि देवेशि ध्यानानागमनिश्चिता

न् श्रुत्वा ध्यानं साधकः शीघ्रं जीवन्मुक्तो भविष्यति २१ इति श्रीदक्षिणामूर्तिमुनिविरचिते उद्धारकोशे तंत्रेति

स्वदेवीखेचरीमंत्रोद्धारकोशाख्यानं नाम षष्ठः कल्पः ६ ॥ दक्षिणामूर्तिः ॥ मुनीश्वरः प्रवक्ष्याभिध्या उम०

नानागमनिश्चितान् बामकेश्वरतंत्रोक्तं त्रिपुरायाः यथा ब्रुवे १ वामकेश्वरे० ॥ दिव्यांवरां किरजसुमिहिरा १७

ग्निचन्द्रनेत्रां सुधांशुमुकुटां हिमसन्निभाभां सिंहासनां परशुखड्गधरां भुजाभ्यां ब्रह्मेन्द्रविष्णुनमितां त्रि

व्यंगोपनीयंप्रयत्नतः ४ अथभवानीमंत्रः मुंडमालातंत्रे प्रणवंचैवहृल्लेखांश्रीयुग्मंपरांपुनः हरिणाक्षीहृ
र्यंकूर्चंहरंवह्निसंयुतं ५ प्रकाशं ॐश्रींश्रींॐॐह्रींश्रींश्रींहूंफट्स्वाहा अथबगलामुखीमंत्रः आगमल
हर्यां तारंचैवमहाबीजंद्वादशंसमुदाहृतं ६ मंत्रंचद्विशिरोज्ञेयंततःपल्लवमुद्धरेत् भगवतिबगलामुखि
देवितततःपुनः ७ तथापिसर्वदुष्टानांवाचंमुखपदंतथा स्तंभयद्वितथाजिह्वांकीलय२द्विबुद्धिंतथा ८
विनाशयद्विवारंचमन्त्रिकाबीजकंतथा अक्षरंतेपयोज्ञेयंद्विपंचाशदक्षरेमनुः ९ अथमन्त्रिकाबीजोद्धारः
भैरवतंत्रे महिंजंमन्त्रिकाबीजंमन्त्राबीजंप्रशस्तिका मन्त्रान्तंपरंज्ञेयंह्रींबीजस्यसुरेश्वरि १० प्रकाशं
ॐह्रींभगवतिबगलामुखिदेविसर्वदुष्टानांवाचंमुखंपदंस्तंभय२जिह्वांकीलय२बुद्धिंविनाशय२ह्रींॐ
स्वाहा अथइन्द्राक्षीमंत्रः रुद्रयामले अनंकुंतीहृंपंदेविकूर्चयुग्मंतथैवच १२ पण्यबीजंपक्षंपयुग्मंचमा
णांचततोभिधम् १२ ॥इन्द्राक्षिवज्रहस्तेचलक्ष्मीलज्जावपुष्करं तोयुग्मंहृद्रसनेत्रासः चंद्रोहरंवनं इन्द्रा।
क्ष्यांष्टविंशार्णोमनुः प्रोक्तःसुरेश्वरि १४ अथपण्यबीजोद्धारः शारदापटले० पण्यबीजंसानुबीजंशि

मव्वच॥ ४१ ल वामकेश्वरे अम्रबीजंचजीमूतंचांवुभृत्त्वबलंघनं व भैरवतंत्रे कल्याणंचैवशर्मापिशं
भुभंचवतुष्टयं ४२ श रुद्रयामले चंपाबीजंतडिद्बीजंविद्युत्तत्तद्दाततथा ह्लादिनीबीजमेवंचषकारस्या
नजंपरम् ४३ ष शक्तिःशर्मापिविज्ञेयेशरच्छंकेतथैवच सकारस्यमयाप्रोक्तंग्रंथेच्छिन्नाशिरोमणौ ॥
४४ सिद्धसारस्वते॰ छविबीजंकांतिबीजंशोभापिसुषुमातथा आकाशंधाम तंदेवि हकारस्यापरंप्रधे
४५ ह कुलचूडामणौ देवबीजंनिर्जरंचत्रिदशंत्रिदिवेशकं सुरबीजंचगीर्वाणंलेखमप स्वबीजकं त्त
वर्णानांदेवदेवेशिकोशमेतंसुगोपितं दक्षिणामूर्तिनातेषांभक्त्यादिव्यंप्रकाशितम् ४७ इतिश्रीदक्षि
णामूर्तिमुनिविरचितेउद्धारकोशेतंत्रेवर्णकोशाख्यानंनामपंचमःकल्पः ५ ॥ ईश्वरउवाच ॥ह्लास
राणांपृथक्नामकंां प्रीं श्रीं ह्रीं ह्लौः तथा वर्णकोशस्यचपृथक्सत्त्वंसत्त्वंवरानने १ अथवक्ष्यामितेदेवित्रि
लोभुकेनदेवताः दक्षिणामूर्तिनापूर्वमृषीणांभाषितःस्वयं २ भवानीप्रथमाख्याताद्वितीयावश्यलामुखी
इन्द्राक्ष्यपितृतीयावत्रिलोभुवनदेवताः ३ आसांमंत्राणिवक्ष्यामिशृणुत्त्वंपर्वनात्मजे यस्यकस्यनवक्त

ढ ।भैरवतंत्रे।वाणबीजंमार्गणंचप त्रिण माशुगंतथा कुब्जासर्वस्वे रात्रिबीजंतमीबीजंतामसीबीजंतामसीबी
जमेव च दपावचतणदाबीजंतकारस्यान्ततंपरं ३३ त० कुलार्णवे विलबीजंचविवरंसुषिरंनागकेलकम् ॥
थ० स्वतंत्रे चक्रिबीजंव्यालबीजंसर्पःकाकोदरोरगौ ३४ भोगिबीजंभुजंगंचभुजंगममितिस्मृतं द त्रिपुरा
तिलके ॥पुष्पबीजंप्रसूनं च प्रसूतिःसुमजा तथा ३५ ध त्रिपुराशिरोमणौ क्षारबीजंचलवणंसैंधवं…कं
तथा वाणहंचान्तंतरव्यातमपरंसुरवंदिते ३६ न छिन्नाशिरोमणौ मत्स्यंचमीनबीजंचसफरीबीजमेवच०
झषबीजंतथाज्ञेयंपकारस्यान्तजंपरं ३७ प शारदापटले कूर्मबीजंचकमठंकर्कटोपिकुलीरकम् फ
कालीसर्वस्वे ऽभिर्वीविसतथादेवितरंगस्त्रितयंतथा ३८ व मुंडमालातंत्रे भद्रिकाभास्वतीभीमाभकारस्या
न्तंपरम् भ आगमामृतमंजर्यां दुलिबीजंशिलीबीजंमंडूकंदर्दुरंतथा भेकीबीजंमयाख्यातंमकारस्य
न्तंपरम् ४० म स्वतंत्रे वायुबीजंतथावाग्मीबाचालंवैश्यबीजकं वीरबीजंतथावापीयकारस्यान्तजंप
रम् य श्यामातंत्रे अग्निरेफश्चवह्निश्चहुतभुग्हव्यवाहनः र स्वतंत्रे वानबीजंतथाध्वांतमोहंतिमिर

बी०को० चक्रबालकं वै ष्टरश्च वबीजंच खकारस्यान्ततंपरं ख २२ कुलचूडामणौ शिववीजं चशंभुश्च शर्वः शंक
१५ र एवच गकारस्यान्ततंचान्यन्मयाप्रोक्तंनगात्मजे २३ ग रुद्रयामले० जिनवीजंषडभिज्ञंमारजिद्वीजमेवच
मायासुतोर्कबंधुश्चगौतमंकृत्रिमंपरम् २४ घ कुब्जासर्वस्वे० षडाननः शरजन्मास्कंदः कुमारबीजकं
शंभवः शालिगोवीजंकृत्रिमंपरमीरितं २५ ङ भैरवतंत्रे० नाट्यवीजंचनटनंतांडवंनृत्तबीजकं च कामे
श्वरे शनिवीजमर्कजंच पंगुवीजंतथैवच २६ कालंचसौरवीजंचसप्तिसुंदरवीजकं छ आत्ममालकारे
स्तनबीजंकुचंचैवमुरोजोहृज्जमेवच २७ ज वामकेश्वरे० इच्छावीजंस्पृहाकांक्षा लिप्सावीजचतुष्टयं
। झ । त्रिपुरासर्वस्वे०॥ यमवीजंकालवीजंकृतांतेसमवर्तिनम् २८ केनाप्रेमस्तुबीजंचनकारस्यान्ततंप
रं ञ स्वतंत्रे गर्जितंस्वनवीजंचसनिस्तंरस्मितंतथा २९ ट वामकेश्वरे पद्मः पंकजपयोजोनीरजंम
बुजंतथा ठ रुद्रयामले सिंहिकासरसीवीजंरेणुकावीजमेवच ३० अंजनीवीजमाख्यातंडकारस्यान्ततं ग्रामु०
परम् ड भैरवतंत्रे वायुवीजमनिलंचसमीरणंमरुत्तथा ३१ समीरंचाशुगंज्ञेयंवातंश्वसनवीजकम् ॥ १५

ऋ।विश्वयामले॥कृपाबीजंदयाबीजंकरुणाकार्षिकंतथा ऋकारस्यान्तमन्यद्भाषितंविश्वयामले १२॥
ॠ।रुद्रयामले॥विश्वंक्यंतंजगद्बीजंगौर्वंप्रोक्तंमयाशिवे २मंत्रसागरे० गंगाबीजंस्वर्धुनीचन्यकवापीच
स्वर्णदी १३ श्रोक्तमन्यद्रसस्यंवलृकारस्यमयास्मृतं १४ लृ कुलचूडामणौ एकादशीमात्रिकाच लता
बीजंतथैवच क्लीबीजंवराकीचशान्यंकृत्रिमकंपरं १५ ए।त्रिपुरासर्वस्वे॥वाग्भवमूर्द्धबीजंचवारणंवं
डिकेश्वरः चंद्रोपिचमर्वसनंवासनापितथैवच १६ चार्वंग्यपिचचर्मोणंमात्रोद्वादशकोमथ महेश्वा
तंमयादेविचैकारस्यान्तंपरम् १७ ऐ छिन्नाशिरोमणौ ॥प्रणवंचतथानारंप्रसंतोमापित्र्यंबकः ॥०
त्रासस्तारवमेवंचकैतवंचमयास्मृतं १८ ओ भैरवतंत्रे मोक्षबीजंतथामुक्तिज्ञानंनिर्वाणमेवच आगस्य
चमयाख्यातंमोकारस्यसुरेश्वरि १९ औ सिद्धसारस्वते० अंबीजंदत्तबीजंचपादपंचधराक्रु हं भूरुहंच
मयाख्यातमंकारस्यान्तंपरम् २० अं सुंदरीसर्वस्वे नागबीजंभूधरंचभाग्यबीजंचवारुणं अः छिन्नं
रहस्ये वेधोबीजंविधिर्ब्रह्मास्वयंभूबीजमेवच २१ क आगमान्तमंजर्यां नभोबीजंपुष्करंचवायुबीजं

बी०को० ऋषयः उ० ब्रह्मर्षे ब्रह्मपुत्र त्वं सकलागमपारग प्रसन्नोसि महाभाग कृपालुर्भव सांप्रतम् १ श्रुतं शास्त्र
१४ मिदं देव विविधं मंत्रनिर्णयं वर्णकोशं च मंत्राणां श्रोतुमिच्छामि हे विभो २ दक्षिणामूर्त्तिः शृणुध्वमृषयः सं
र्वे मत्तो रूपं यथाविधि वर्णानां मंत्रकोशं च निःसृतं त्रिपुरमुखात् ३ ईश्वर उ० शृणु देवि प्रवक्ष्यामि मंत्रको
शं सविस्तरं मुनीनां स्तुचितं पञ्च दक्षिणामूर्त्तिना पुरा ४ त्रिपुरातिलके ईश्वर उ० आत्माबीजमकारं त्वं स्वांत
हृद्बीजमेव च मानसं च मनोबीजं येनाम हमिति स्मृतं ५ आ शल्यं स्वमंबरं व्योम वैह्नवं चेति कथितं आकार
स्यान्यज्जं वास्य दुर्भैरवतंत्रके ६ आ इंद्रबीजं तथा जिष्णुर्मरुत्वान्मघवा हरिः सैव मिकारवर्णस्य गते च भैरव।
तंत्रके ७ इ ।इति त्रिपुरातिलके। बुद्धिबीजं तथा मेधा भौ बीजं च मतिस्तथा ऐं दृष्टं तथैव विज्ञेयमीकारस्या
न्यतं परं ८ ई। कुब्जिकासर्वस्वे० कृतिबीजं तथानंदा वामनं वार्तबीजकं सौर्यमुकारवर्णस्य कृत्रिमं परमी राम०
रितं ९ उ। सुंदरी शिरोमणौ। कचबीजं तथा केश मूर्द्धजं च शिरोरुहं ऐं दवं चान्यदज्ञं मूकारस्य महेश्वरि १० १४
ऊ। कालीरहस्ये।। पाप्माबीजं तथा पापं किल्विषं कल्मषं तथा किंक्रोबीजमेवं च मांगलं प्रत्नं परम् ११ ॥

एहवेहय्यवाहनः लज्जालक्ष्मीस्तथाभीमावनमंमेप्रकीर्त्तितं ३४ एहोर्विशास्त्ररेवालोपथाभीष्टफल
प्रदः अथगर्ज्जितबीजोद्धारः स्वतंत्रे० गर्ज्जितंस्वनवीजंचस्तनितंरसितंतथा ३५ ढंबीजानिचचत्वारि
हविर्माण्यपराणिच प्रकाशं ॐक्रौंक्रौंहूंहूंटंटंकधारिणेएहवेरं ह्रींश्रींभैंस्वाहा शंभोर्नेत्रत्रयाणांचदे
वताकीर्त्तितामया ॥३६॥स्वदिनेसाधकोमंत्रासाधयेद्ग्रहणेथवा अथकेतुमंत्रः तंत्रमुक्तावली प्रणवंस
कलादृष्टिस्तनोपिकृरकूपिणे ३७ केतवेपिततःपश्चाच्चद्रःशंकाप्य स्तथा केतोरयंमनुःप्रोक्तो देवेपंच
दशाक्षरः ३८ दृष्टिबीजोद्धारः ॥मुंडमालातंत्रे॥ दृष्टिबीजंचकरकंवर्षोपलस्तकवार्षिकः कूंबीजानिच
चत्वारिहविर्माण्यपराणिच ३९ प्रकाशं ॐह्रींकूंकूंरस्तपिरोकेतवेऐंसौःस्वाहा॥ इतिमूलं॥ एषांनवग्र
हाणांचमनवोभाषितामया॥ अद्याहंतवदेवेशिवर्णानांवच्मिवैमनून ४० कोशंलोकोपकारार्थंगोप्यं
कुरुमहेश्वरि येनविज्ञानमात्रेणमांत्रिकःसाधकोभवेत् ४१ इतिश्रीदक्षिणामूर्त्तिमुनिविरचितेउद्धार
कोशाख्यतंत्रेसकलागमसारेपंचग्रहविग्रहकेतुमंत्रोद्धारकोशाख्यानविधिर्नामचतुर्थःपटलः ४ ॥

धिपतयेबृहस्पतयेवौंठः श्रौंठःऐंठः स्वाहा अथचंद्रमंत्रः कालीपटले अनंतंचहरिणाक्षीचकुंभीबीजंसमन्वि
तं २४ हवेतिशब्दसंयोज्यपश्चस्यानुस्वारसंयुतं नाद्यबीजंततोमध्येचंद्रायांतेशम्रीस्मृता २५ अथनाद्यबीजो
द्धारः भैरवतंत्रे नाद्यबीजंचनटनंतांडवंनजबीजकं २६ चंविजानिचचत्वारिकृत्रिमाण्यपराणिच प्रका०
ॐश्रींक्लींचंचंद्रायनमः एतेवैपंचबाणाणांग्रहाःपंचप्रकीर्तिताः॥ २७॥ अथभौममंत्रः ॥शारदायांकम्पां०
चारणंहारिणीबीजंरुक्मिणीशर्वरीपतिः वेधोबीजंततोमध्येग्रहाधिपतयेततः भौमायांतेप्रसः प्रोक्तंमनुः
पंचदशाक्षरः अथवेधोबीजोद्धारः स्वतंत्रे वेधोबीजंविधिर्ब्रह्मास्वयंभूबीजमेवच २८ कंबीजान्यपिचत्वारि
कृत्रिमाण्यपराणिच प्रकाशं ऐंह्रौं श्रींग्रांकंग्रहाधिपतयेभौमायस्वाहा॥ अथशनैश्चरमंत्रः ३० आगमस्तृतीया
तारंलज्जाश्रियंवैवबीजंत्रिशिरऊर्द्धतः ग्रहचक्रवर्तिनेपिशनैश्चरायवैततः ३१ मदनंवासनाशक्तिरंतेनी
मुद्राहृतम् शनैश्चरस्यदेवस्यमनुर्विंशाक्षरःस्मृतः ३२ प्रकाशं ॐह्रींश्रींग्रहचक्रवर्तिनेशनैश्चराय
क्लींऐंसःस्वाहा अथराहुमंत्रः अस्यामेव प्रणवंरसनाकुंभं तटयुग्मंचगर्जितं ३३ ततोटंकधारिण्येवं

श्रीभवेशालिंगीबीजंतथाषड्मुखबीजकं डंबीजानिवसन्नैवंकत्रिमाण्यफराणिव १३ प्रकाशं ॐ ह्रांक्रोंडं
ग्नहनाथायपशुधायस्वाहा अथशुक्रमंत्रः आगमशिरोमणो प्रणवंमूर्द्धबीजंचस्तनबीजसमन्वितं १४ शिव
बीजंततोमध्येग्नहेश्वरायवैततः॥शुक्रायांतेश्मरश्चैवबालश्चतुर्दशाक्षरः १५ प्रकाशं ॐ ऐंजंगींग्नहेश्वरा
यशुक्रायनमः अथबृहस्पतिमंत्रः त्रिपुरातिलके अर्हंमायापिसौभाग्यांसुरेशिप्रोच्चरेत्ततः १६ तरंगदेशेसं
योज्यचार्धगोहिंशुबीजकं ऊर्द्धंचषट्शिरोस्तेयंततःपल्लवमुद्धरेत् १७ ततोग्नहाधिपतयेबृहस्पतयएवच
पुनोबारिवहश्चैव५ लंद्वीभरीगलावभरथस्तुणमेवभरुप्रीक्षंवनंशिवे सौभाग्येतिदोषः दक्षिणामूर्तिः
तस्याधिगतस्तुमुनयस्तपंपरमनधीर्भवेत् रुक्मिणीकसौभाग्याधोभुवोंतरंमहत् १८ सुन्दरीसर्वस्वे ॥१९
प्रणवंसकलाचैवदेवेशिरुक्मिणीतथा वारिवाहइतिदोषः २० वामकेश्वरे प्रणवंचपरांलक्ष्मीबीजंचैव
संयोजयेत् वन्हिमंठंतथापश्चाद्ग्रहाधिपतयेततः ततोबृहस्पतयेपिततोजीमूतबीजकं २१ पद्मंलक्ष्मी
नीरजंचवासनापंकजंतथा अनेनीरंसमाख्यातंपंचविंशाक्षरोमनुः २२ प्रकाशं ॐ ह्रींश्रींक्लींऐंग्लौंग्नहा

बी०को० १२

मुनयऊचुः ॥ ब्रह्मर्षे सर्वतत्त्वज्ञ शास्त्राम्भोनिधिपारग ॥ नवग्रहाणामस्माकं मनूंस्त्वं वक्तुमर्हसि १ ईश्वरउ० तस्मि
न्काले महर्षीणां यदुक्तं धातृसूनुना। नवग्रहाणां मंत्राश्च वच्मि विद्धि परमेश्वरि २ एते पंच महेशानि पंचैवैषां बाणदे
वताः॥ सोमार्कि राहवश्चैव वज्रपण्ते मुनीश्वराः ३ देवस्कंदपशोर्लोचनत्रयदेवताः केतुश्च परमेशानि भूमे देवः प्र
कीर्तितः ४ एतेनवग्रहाः प्रोक्ताः शंभुना रुद्रयामले अथादौ पंचग्रहे मंत्रोद्धारः तत्रादावादित्यमंत्रः विश्वनाथस्य
संहृते ॥ प्रणवं चांबरं लक्ष्मीर्व्योमबीजं तथैव च ६ बीजं तुर्ये शिरोजे यं ततः पञ्चवमुद्धरेत् ग्रहाधिराजापतये
आदित्याय तथैव च ७ अंते पयस्कं विज्ञेयं मनुर्द्यष्टाक्षरः स्मृतः अथांगारमंत्रोद्धारः स्वतंत्रे अंगारंवसुबीजं च
शून्यं शक्तीति विदुषः ८ हरिं तं हरिणीबीजं हरिदूर्बीजमेव च ह्रौं बीजानि षट् देविकृत्रिमाण्यपराणी च ९ अं रा म०
गारबीजो ह्रूं ग्रां ह्रौं प्रकाशमृ० ॐ ह्रौं श्रीं ग्रां ग्रहाधिराजाय आदित्याय स्वाहा इति मूलम् अथ बुधमंत्रः ॥ १२
स्वतंत्रे प्रणवं च तथा स्कंदं रक्ताच षडाननः १० मध्ये ग्रहनाथाय बुधायांते च ठद्वयं बुधस्य ग्रहनाथस्य मनुस्त्व
पुरे प्रोक्तः ११ अथ षडाननबीजोद्धारः कुब्जिकासर्वस्वे० षडाननः षडन्नन्मा स्कंदः कुमारबीजकम् १२ ॥

राणिच ५४ रुकाररकारयोर्भेदः अग्निबीजेरं अब्धिबीजेरुं अग्न्यब्धयोरंतरादंतरमितिनदोषः अथकल्पबीजो
द्धारः आगमालंकारेण० कल्पबीजंचसंवर्तेप्रलयं सर्पबीजकं तामिकं तरकं देवोर्ह्रंतथाकल्पांतबीजकं भुंवी
ज्यान्येवमष्टोचकृत्रिमाण्यपराणिच ५५ अथशतघ्रीबीजोद्धारः उक्तंचागमलहर्यां शतघ्रीशाल्मिकाश्यामा
शाड्वलाशुष्कलातथा ५६ घ्रींबीजानितुपंचैवंकृत्रिमाण्यपराणिच प्रकाशं अंक्लींबीरं भ्रुंघ्रोंह्रींवटुकभैरवायन
मःस्वाहा इतिमूलं अथमृत्युंजयमंत्रः आगमलहर्यां अप्रहृतं शक्तिशोभेपिशंकामांतस्माद्वैधालपहैतंतथै
व तस्माच्छक्तिःस्वशरहृज्ज्ञत्रासौमंत्रोद्धारोदेविमृत्युंजयस्य ५७ प्रकाशम्० ॐजुंसःहंसःमांमालयसोहं
सःजुंॐ इतिमूलम् अथसुग्रीवमंत्रोद्धारः उक्तंचागमशिरोमणौ तारंमायांवाग्भवंमन्मथंचशक्तिमध्येनामस्य
कांतस्थांते कालीपद्योकूर्चपद्योसमस्तापद्योनीरमेषसुग्नीमंत्रौ प्रकाशं उंह्रींऐंक्लींसौःसुग्रीवदेवायक्रोंठः
क्रूंठःह्रींठःस्वाहा० इतिमूलं मयाख्याताःस्करेशानिसप्तैतेदेविबालकाः कलौसाधितमंत्राणांसाधकानांब
प्रदाः॥ ५८॥ दक्षिणामूर्तिः॥ शृणुध्वमृषयःसर्वेयुष्माकमस्तियद्धृदि ब्रवीमिभवतांप्रीत्याप्राज्ञापयितुमर्हथ
५९॥ ॥इतिश्रीदक्षिणामूर्तिमुनिविरचितेउद्धारकोशेतंत्रेसप्तविद्यासप्तकुमारमंत्रोद्धारकोशाख्यानेनामतृती

बी०को० श्रींक्रौंऐंह्रौंहूंफट्कार्जवीजोर्युनायस्वाहा इतिमूलम् शुक्रवीजोह्रौंब्रोंलीं अथहनुमन्मंत्रोद्धारः उक्तंचकु
११ लचूडामणौ प्रणवमूर्द्धवीजंचविभूतिस्तदनन्तरं ४८ हनुमतेततःपश्चाद्रामदूतायचैनमः लंकाविध्वंस
नायैवअंजनीगर्भसंततः ४९ भूतायशाकिनीचैवडाकिनीतदनन्तरं विध्वंसनायकिलिह्रोवुवुकारेणवैपु
नः ५० विभीषणायहनुमद्देवाय तदनन्तरं असंमायांहर्णांस्त्रीं ओंषंस्कंदंतथैवच ५१ हरमावस्तथांते
पिमप्तषष्ठ्यस्तरोमनुः प्रकाशं ॐऐंह्रांहनुमतेरामदूतायलंकाविध्वंसनायांजनीगर्भसंभूतायशाकिनीडा
किनीविध्वंसनायकिलिकिलिवुवुकारेणविभीषणायहनुमद्देवाय ॐह्रींश्रीह्रौंह्रांफट्स्वाहा इतिमूलम्०॥
अथभैरवमंत्रोद्धारः उक्तंचरुद्रयामले० प्रणवंमन्मथंचैवमभ्रवीजसमन्वितम् ५२ अग्निवीजंकलावीजंश्या राम०
तघ्नीवीजसंयुतम् मायामध्येवटुकभैरवाय्यापमरीतथा अंतेयोभैरवस्यायंमनुरष्टादशाक्षरः ॥ अथाभ्र
वीजोद्धारः॥वामकेश्वरे॥ अथवीजंचजीमूतमंवुभृद्बलंघनं विंवीजानिचपंचैवंकृत्रिमाण्यपराणिच ५३॥ ११
अथाब्धिवीजोद्धारः त्रिपुरातिलके अब्धिवीजंतथासिंधुः सांभवंसागरस्तथा रुंवीजानिचचत्वारिकृत्रिमाण्यं

सप्तवाल्लिकाः ॥ अथान्येगणेशमंत्रः ॥ उक्तंचरुद्रयामले॰ प्रणवंकमलांलज्जांकंदर्पमथबीजकं शंकरंषट्
शिरोमंत्रंततःपल्लवमुद्धरेत ४२ गणपतयेततःपश्चाद्वरवरदमेवच सर्वजनंततःपश्चान्मेवशमानयेतिच
अंतेपिठद्वयंज्ञेयमष्टविंशाक्षरोमनुः ४३ प्रकाशं ॐश्रींह्रींक्लींग्लौंगंगणपतयेवरवरदसर्वजनंमेवशमा
नयस्वाहा इतिमूलं अथकुमारमंत्रः कुमारचूडामणौ प्रणवंछविबीजंचमंत्रंतुहृदिशिरःस्मृतं ४४ मध्ये
कुमारायनमोह्यंतेनेरमुदाहृतम् अथछविबीजोद्धारः सिद्धसारस्वते छविबीजंकांतिबीजंशोभापिसुषुमा
स्तथा ४५ ह्रांबीजानिचचत्वारिकृत्रिमाण्यपराणिच प्रकाशं ॐह्रींकुमारायनमःस्वाहा इतिमूलं अथका
र्तवीर्यार्जुनमंत्रः उड्डामरतंत्रे॰ प्रणवंवाग्भूम्यापिवरुकंमन्मथस्तथा सु ऊंबीजंतथाशक्त्यंकमलांरमनां
तथा ४६ चंद्रंडिंवंचक्रलंचतुरंगंचसुरेश्वरि मध्येतन्नामविन्यस्यपंकार्तवीर्यार्जुनायच अंतेनमोमनुःप्रोक्तःए
कविंशाक्षरःशिवे अथशुक्रबीजोद्धारः ॥ छिन्नाशिरोमणौ शुक्रबीजंतथाकाव्योभार्गवःकविबीजकम् दैत्या
मात्योमहेशानिसुरासुरनमस्कृते ४७ द्रांबीजानितुपंचैवकृत्रिमाण्यपराणिच प्रकाशं ॐद्रांद्रींक्लींद्रोंद्रां॰

बी॰को॰ यैवच ३३ ॥ अंतेचवासनाबीजंपद्मंकांसपिनीरजम् नर्त[illegible]स्तुतेस्वरि ३४ कुलवागीश्व
१० रीदेव्याःतुर्यविंशाक्षरोमनुः अथेच्छाबीजोद्धारः वामकेश्वरे इच्छाबीजंस्वहाकांतालिप्ताबीजचतुष्टयम्
ऊंबीजान्येवमेतानि कृत्रिमाण्यपराणिच ३५ ॥ अथनर्तकीबीजोद्धाराणि छिन्नाः हस्फें॰ नर्तकीबीजमस्युग्रं
वेस्यापिगणिकातथा ३६ पण्यस्त्रीबीजानिपंचस्त्रीबीजस्यान्तंपरं अंबुजांभोजयोरैक्यमितिन दोषः ॥
मकाशं ॐ क्लीं ह्रीं श्रीं हूं ऊंड षहस्लेकुलवागीश्वरि ऐं ठः ठः रंव्लीं ठः स्वाहा इतिमूले एतामद्यामहेशानि
सप्तविद्याःप्रकीर्तिताः अद्याहंतवभक्त्यासुहृदयप्रोचतेतव ३७ कस्मेतत्वं देवितद्वृत्ताभिस्म्मासतः ॥
देव्युवाच॰ सप्तानांबालकानांचकीदृशास्तेमनूत्तमाः कृपयाद्यमहादेववक्ताःश्रोतुंसमुत्सहे ३८ मुनयः ॥
ब्रह्मर्षेसर्वशास्त्रवित्तुत्वत्तःसर्वश्रुतंप्रभोः मनूंस्सप्तकुमाराणामस्माकंवक्तुमर्हसि ३९ दक्षिणामूर्तिः शृणु राम॰
ध्वंमुनयःसम्यक्पुराकृतनिवासस्था शिवायैकथितंप्रीत्यातद्वृत्ताभिस्तविस्तरम् ४० ईश्वरउ॰ गणेशोब्रटु १०
कश्चैवस्कंदोमत्स्यंजयस्तथा कार्तवीर्यार्जुनोप्येवंसुग्रीवोहनुमांस्तथा ४१ रुद्रयामलतंत्रेस्मिन भाषिताः

युगमालंकरणे स्तनबीजंकुचंचैवमुरोजंहस्तमेवच २८ जंबीजान्येवमेतानि कृत्रिमाणपराणिच प्रकाशं ह्रूं श्रीं
ह्रूं ह्रीं क्लीं लुं जंजंवनारव्ये कामेश्वरिबाणदेवते स्वाहा इतिमूलं इतिभैरवपटले अथगौरीमंत्रोद्धारः उक्तंचत्रि
पुराशिरोमणौ प्रणवंकमलांचैवमायावाह्लीकमेवच शिवबीजंतथादेविगौरीशार्वेश्वठद्वयम् २९ भगवत्यामहा
गौर्यावालःश्रीषोडशाक्षरः अथशिवबीजोद्धारः कुलचूडामणौ शिवबीजंचशंभुश्चशर्वःशंकरएवच गंबीजा
निचत्वारि कृत्रिमाण्यपराणिच ३० ॐ ह्रां श्रीं ह्रीं ग्लौं गं गौरिगीं स्वाहा इतिमूलं अथान्नपूर्णामंत्रः उक्तंच
कामेश्वरतंत्रे तारंपरापिकमलामीनकेतनएवच विश्वंततोभगवतिमाहेश्वरिततःपुनः ३१ अन्नपूर्णेठद्व
यंचमनुर्विंशाक्षरःस्मृतः मीनकेतनइतिदोषःउक्तंचत्रिपुरसुंदरीसर्वस्वे अत्तंमायापिपद्माचकामंवि
श्वमुदाहृतम् बीजंतुषट्स्वरोसेयंततःपल्लवमुद्धरेत् विश्वेनसहदेवेशीमूलशीर्षष्वडक्षरः प्रकाशं ॐ ह्रीं श्रीं
क्लीं नमोभगवतीमाहेश्वरि अन्नपूर्णेस्वाहा॰ अथकुलवागीश्वरीमंत्रोद्धारः उक्तंचमुंडमालातंत्रे प्रणवं
मदनंचैवस्कंदंनारायणप्रिया ३२ ततमिच्छान्तरंचैवततःपल्लवमुद्धरेत् उपहसेततःपश्चात्कुलवागीश्व

को० वह्निंगुबीजंसुरेश्वरि स्त्रींबीजोद्धारमेतद्धिचाप्यदनतमीरितं २१ अथतमोबीजोद्धारः स्वतंत्रे तमोबीजंतथाध्वां
९ तमोहंतिमिरमेवच लंबीजोद्धारमेतद्धि लम्बिमंचाप्यदीश्वरि २२ प्रकाशं ऐंग्लौंलंऐंनमोभगवतिवार्तालिवाराहि
देवतेवराहमुखिऐंग्लौंठःठःस्वाहा इतिवाराहीमूलम् अथशारदामंत्रोद्धारः शारदापटले तारंमायांचमद
नंशारद्धितेयमोस्सकं मंत्रंवषट्च्छिरोऽन्तेपंतनःपल्लवमुद्धरेत् २३ भगवत्यैशारदायैबांतेलज्जावह्निद्वयं
द्रुसुद्धारः प्रकाशन ॐह्रींक्लिंसःनमोभगवत्यैशारदायैह्रींस्वाहा इतिशारदामूलं अथकामेश्वरीमंत्रोद्धारः ॥
मायांवह्निरीणादीचचंद्रःशीतांशुरेवच मदनस्त्वोर्मिध्वांतोहौसंपोऽप्यस्त्रनवीजकम् २४ मनुःसप्तशिरोऽन्तेपस्त
तःपल्लवमुद्धरेत् अंबनारमेततोदेविकामेश्वरितथैवच २५ ततोवाणदेवंतेपिचांतेनारसुदाहृतम् कामेश्व
र्यामहादेव्याद्वाविंशत्यक्षरोमनुः चंद्रस्यबीजोद्धारो ऐन्द्र अथचंद्रबीजोद्धारः ङकंचकालीसर्वस्व चन्द्रः ॥ राम०
शीतांशुरिंदुश्वशर्वरीपतिरेवच २६ ताराधिपःसुधारस्मिःकृत्रिमाण्यपराणिच अथोर्मिबीजोद्धारः अस्मिं ९
स्मन्त्रे उर्मिर्वीचिस्तथाचैवंतरंगस्त्वितयंतथा २७ वंबीजोद्धारमेतद्धिपरंबीजंतुकृत्रिमं अथस्त्रनविजोद्धारः ॥

मुनीश्वरान् मनूनु देवो दक्षिणामूर्तिरब्रवीत् १० सप्तविद्यायुग्प्रोक्ता वज्रयोगिन्यादिदेवताः तासां नामानि
वक्ष्यामि पर्वतेश्वरनंदिनि ११ दक्षिणामूर्तिनादेव प्रकाशितानि तत्वतः श्रीवज्रयोगिनी देवी वाराहीशारदा
तथा कामेश्वरी तथा गौरीत्यन्नपूर्णी तथैव च १२ कुलवागीश्वरी चैताः सप्तदेव्याः श्रुतामया दक्षिणामूर्तिनातेषां
सप्तदेव्याः प्रकीर्तिताः १३ एतासां बलमाश्रित्य देवी त्रिपुरसुंदरि सस्रजे जगदेतच्च पाल्यतेपि सुरेश्वरि ॥
हरतेपि तथा विश्वं चराचरसमन्वितं ऋषिः एतद्वाक्यामृतं तस्या मुखांभोजाच्छ्रुतं मया १५ तासां मंत्रं प्रवक्ष्या
मि शृणुध्वं मुनिपुंगवाः॥ अथ मंत्रोद्धारः ॐचस्वतन्त्रे प्रणवं सकलाचैव बीजो ह्रींफट्स्वाहको॥ मध्येपि वज्र
योगिन्यै ह्यंते नीरमुदाहृतम् १६ प्रकाशं ॐह्रींवज्रयोगिन्यै स्वाहा अथ वाराहीमंत्रोद्धारः ॐच त्रिपु
रातिलके वासनाचैव वा ह्रींकं नमो बीजसमन्वितम् वाग्भवं चौ श्मकं चैव ततः पल्लवमुद्धरेत् १७ ढग
वतिचवार्तालि ततो वाराहिदेवते वाराहिमुखे चैवं वासनां चमठं तथा १८ ततः पंकजपयोजोहरं नीरं महेश्वरि
वाराहिमगवस्याश्चाष्टविंशाक्षरो मनुः १९ अथ वाह्लोकबीजोद्धारणि २० मुंडमालातंत्रे वाह्लीकं मवसंज्ञं

वो॰को॰ लप्रदाः ॥ इतिदक्षिणामूर्तिमुनिविरचितेउद्धारकोशतंत्रे सर्वागमसारे दशविद्याष्टदेवीमंत्रोद्धारकोशभेद
८ देवीमंत्रोद्धारस्तवकोनामद्वितीयकल्पः २ ॥ भैरवः ॥ ततोदेविप्रवक्ष्यामिदेवीनांमंत्रमुत्तमं शृणुष्वैकमना
भूत्वायेनसिद्धिर्भवेद्ध्रुवम् १ दक्षिणामूर्तिनातस्मिन्कालेंतेवासिनेतदा यत्सूचितंमहादेवितद्वक्ष्यामिसमासतः
२ तस्मिन्कालेमुनेस्तस्यमुनिसेवितमाश्रमं ॥ आययुर्मुनयस्सर्वेमन्त्रिणश्चसमुत्सुकाः ३ लोहितोहालको
शांवमातंगौपुंडरीकजौ शांडिल्यगालवौवेदत्तस्याश्रमपदंययुः ४ सर्वेमिलित्वामुनिपुंगवंतेश्री दक्षिणा
मूर्तिमिदंसमूचुः स्वकीयदेवेष्टमनून्सगूढान्पप्रच्छुरादौपरमेशमूलं दक्षिणामूर्तिरुवाच शृणुध्वंमुनयःसर्वेप्रवक्ष्या
म्याश्चर्यमुत्तमं चराचरेस्मिन्जगतिदेविसीमंतशेखरा नतादृशीचचिंत्याक्वापियथात्रिपुरसुंदरी ६ तस्यामुखाम्बु राम॰
जात्सप्तदेव्याविद्याःप्रपार्श्चुताः ॥ यथेष्टफलदाभक्त्यासर्वरोगभयापहाः ७ अचिरेणैवकालेनफलदास्साध्यमन्त्रि ८
णां ऋषयऊचुः कास्ताकानिनामानिकीदृशामनवस्तथा॰ श्रोतुमिच्छामहेत्वत्तोवक्तुमर्हसिनःप्रभो कौ
दक्षिणामूर्तिः शृणुध्वमृषयःसम्यक्सर्वागमरहस्यकं ८ येनश्रवणमात्रेणहयमेधफलंलभेत् ईश्वरः॰

भेदानि सरस्वत्याकानेन अथताराभेदानि० प्रकाशम् ॐ ऐं हूं तारे फट् स्वाहा ॐ स्त्रीं ऐं हुं एकजटे फट् स्वाहा ॐ ह्रूं
ऐं हूं नीलसरस्वति फट् स्वाहा ॐ ह्रीं स्त्रीं ह्रीं ऐं हूं उग्रतारे फट् स्वाहा इति ताराभेदानि अथ भुवनेश्वरीभेदाः ॐ भैर
व्यै नमः ॐ ह्रीं भीमरूपायै नमः ॐ श्रीं भीमायै नमः इति मूलं ॐ ह्रीं श्रीं क्लीं भुवनेश्वर्यै नमः अथ मातंगीभे
दानि चक्रिण्याः ॐ क्रीं क्लीं महाचक्रिणि ऐं ठः स्वाहा ततः कुब्जिकायाः ॐ श्रीं प्रों कुब्जिके देवि ह्रीं ठः स्वाहा ॥
अथ शाकंभरीमंत्रः ॥ ॐ श्रीं देवि शाकंभरि क्लीं ठः स्वाहा इति मूलं अथ शाकंभरिकामंत्रः ॐ हूं पुं प्रां शें देव्यै अपर्णायै नमः
अथ हैमवतीश्वरीमूलं ॐ ह्रीं श्रीं हैमवतीश्वरि ह्रीं स्वाहा अथ भीडाभेदविहीनेस्थलम् अथांबिकामूलं ॥
ॐ ह्रीं मातरंबिके हुं फट् स्वाहा इति मूलं एतानि भेदमंत्राणि महाप्रोक्तानि पार्वति एतासां दशविद्यानां अन्या
सां शृणु वच्म्यहं ५७ भद्रकाली यथा देवी दक्षिणाकालिका तथा तुरीचेतामयाख्याता भेदहीना महेश्वरि ५८
अथ छिन्नमस्तिका द्विधा ॐ ह्रीं श्रीं छिन्नमस्तिके क्लीं फट् स्वाहा द्वितीयो यथा श्रीं ह्रीं ह्रीं ऐं वज्रवैरोचिनि ह्रूं
फट् स्वाहा इति मूलम् दक्षिणाकालिका श्यामा कालरात्री त्रिपुरसुंदरि ५९ एता भेदविहीनाश्च यथाकामफ

बी॰को॰ क्लींकरणंशरदपितथाप्यसंपरारुक्मिणी विद्याश्री विपरीतभावसहिताः श्रीषोडशात्माविधिः ४४ इतिषोड
७ शात्मीभिदानि श्रीदेव्युवाच॰ महेश्वरत्रिकालज्ञशरणागतवत्सल भेदैर्युतानांदेवीनांमनूंस्त्वंवक्तुमर्हसि ४५
ईश्वरउ॰ दस्यथातवदेवेशितद्वक्ष्यामिसमासतः यदुक्तंभैरवतंत्रे अथषष्ठिमयः ॐह्रींश्रींहरिणाख्याबीजद्व
यंफलदंसदाः अंतंह्रींशक्तिनोरमंतेप्रोक्तमयिधूर्जटिना ४७ अथरुक्मिण्याः ॐह्रींवेवंतुरुक्मिण्यास्तारं
लक्ष्मीमयस्तथा अंतेप्रोक्तंमहेशानीलक्ष्म्याःभेदद्वयंस्मृतं ४८ प्रकाशं ॐह्रींश्रींलक्ष्मिमहीतःस्वाहा ॐह्रीं
रुक्मिणीॐश्रींस्वाहा॰ अथसरस्वतीभिदानि तेषामपरावाग्भवमेवस्यात् तारंचलज्जाःपरमेश्वरेण वाग्देवतायाः
फलदंहिबालंनूनंममेभक्तिपरायणानां ४९ अथवाण्याः तारंलज्जाऐंबीजंचह्यन्तेस्तंभमुदाहृतम् ॐह्रींऐंवाण्यैनमः राम॰
इतिमूलं वाण्यपिविभूतिश्चअनंतसरस्वत्येततः ५० नमोऽन्तेपरमेशानिमयाप्रोक्तंनगात्मजे अथानलप्रि ७
यामूलं तारंलज्जावाग्भवंचमध्येऽनलप्रियेततः अष्टंविश्वंतथाचान्तेपर्वतेश्वरनन्दिनि ५१ देव्याश्चत्वारि

वामकेश्वरे तारापिताभिणीचैवमेकजटातथैवच ३१ नीलसरस्वतीचैवमुग्रताराप्रकीर्तिता ताराभेदानिपंचैवम
स्तोभ्यैवनिभाषितं ३२ अथभुवनेश्वरीभेदानि उक्तंचभैरवतंत्रे॰ भैरवीभीमरूपाचभीमापिभुवनेश्वरी। भक्त्याफल
प्रदादेविनिस्संवर्षचतुष्टये ३३ अथमातंगीभेदानि॰ उक्तंचविश्वसारतंत्रे शांभिकापितथापर्णाफलदापिहि
वर्षिके ३४ ततोराज्ञीभेदानि राज्ञाभेदद्वयंप्रोक्तंसर्णाक्षरवगगामिनी। द्विवर्षमध्येराज्ञोचभक्त्याराज्यंप्रयच्छति ३६
भीडाभेदविहीनाचप्रजाभाम्यविवर्द्धिनी इतिकुलार्णवे अथज्वालामुखीभेदानि॰ उक्तंचज्वालाशिरोमणौ॥ ॥
आदौज्वालामुखीचैवमंबिकाभगरूपिणी। यथेष्टंफलदंप्रोक्तंज्वालाभेदत्रयंशिवे ३८ एतासांदशविद्यानांनाना
भेदक्रमःस्मृतः ततस्त्रिपुरातिलके त्रिपुराभेदानि त्रिपुराभैरवीविद्याहिंगुलाचंडिकातथा चामुंडानारसिंही
चैवैंद्रीहैमवतीश्वरी। ४० मृडानीवारुणीदुर्गामहात्रिपुरसुंदरी देव्याद्यादशभेदानिप्रोक्तान्येतानिशूलिना॥
४१ प्रकाशं श्रींह्रींसौः त्रिपुराचवर्मवसनंकामःशरद्वैरवि ॐह्रींश्रींनारसिंहितथाचेंद्रीवारणमेवह्रींचमदनःका
मंपराह्रक्लिन्नौंदेवीहैमवतीश्वरी।चक्रमतालज्जातथामन्मथ चन्द्रोवारुणिवाकुईइलपरादुर्गेस्मृताशंभुना श्रींह्रीं

बी० गणेश्वर्यैतथाचांतेविश्वेश्वरिसमास्वयेत् प्रकाशं ॐ ऐं ह्रीं क्लीं श्रीं कार्हेश्वरिसर्वजनमनोहरि सर्वमुखस्तंभिनि
६ सर्वराजवशंकरि सर्वदुष्टनिर्दलिनि सर्वस्त्रीपुरुषाकर्षिणि बंधीशृंखला त्रोटय त्रोटय सर्वशत्रून् भंजय भंजय
द्वेषीन् निर्दलय निर्दलय सर्वान् स्तंभय स्तंभय मोहनास्त्रेण द्वेषिण उच्चाटय उच्चाटय सर्वं वशीकुरु कुरु स्वाहा दे
हि देहि सर्वं कालरात्रि कामिनि गणेश्वर्यै नमः २४ श्रीभैरवः देवेशि त्रिपुराभालं विज्ञेयं द्वादशात्मकं यस्याभिम
वतोभीस्या श्रृणुध्वं मुनयो रहः २५ उक्तं च मुंडमालातंत्रे० त्रिपुरामंत्रराजं तु विज्ञेयं द्व्यदशात्मकं केवलं शक्रये दे
वि सर्वदा गोपयेत्सदा २६ उक्तं चोड्डामरतंत्रे अष्टादशात्मिकात्रेया विद्या श्रीषोडशाक्षरी यस्यवस्युवितंदे
विसर्वेषां सुक्तिप्रदं स्मृतं २७ उक्तं च त्रिपुराशिरोमणौ० अष्टात्मकमिदं बीजं त्रिपुरायाः स्मृतं मया अष्टमि
र्वत्सरैर्देवि मासैरष्टभिरेव च २८ अष्टभिर्दिवसैर्वापि जानियाद्योगलक्षणं लक्ष्मीभेदद्वयं ज्ञेयं भाषितं कृत्ति
वाससा २९ लक्ष्मीश्च रुक्मिणीश्चैव त्रिभिर्वर्षैः फलं लभेत० ३० अथ सरस्वतीभेदानि उक्तं च कामिनीकल्पे०
वाग्देवीमतथावाणीसरस्वत्य नलप्रिया ३१ भेदान्येतानि ख्यातानि फलं वर्षचतुष्टये नतस्ताराभेदानि उक्तं च

ताराख्योजात्रिपंचच प्रकाशं ॐ त्रींत्रोंत्रौंमहातुर्यैनमः १० इतिमूलम् अथछिन्नामंत्रोद्धारः शिखलाशिरोम
णौ ॐ नमः सकलापद्माचारुकंचसुरेश्वरि त्रंत्रेउल्लूनबीजंचफट्द्वयेनसमायुतं ११ प्रकाशं ॐ ह्रींश्रींछ्रीं
छिन्नमस्तिकेफट्स्वाहा अथदक्षिणाकालीमंत्रोद्धारः ॐकंचश्यामारहस्ये कुंतीत्रयंततोयुग्मं द्वमायुग्मंततो
भिधां १३ दक्षिणेकालिकेत्येवंचांतेकालीत्रयंपुनः कूलयुग्मंपरायुग्मंपयःश्चैवंसुरेश्वरि १४ दक्षिणकालि
कायांश्चहनुद्वाविंशदक्षरः प्रकाशं क्रींक्रींक्रींहूंहूंह्रींह्रींदक्षिणकालिकेक्रींक्रींक्रींहूंहूंह्रींह्रींस्वाहा इति
मूलम् अथश्यामामंत्रोद्धारः श्यामातंत्रे हरिणाक्षीततोलज्जाकालीजि ह्वाचतुष्टयं १६ ततःसुधारसेश्या
मेहृल्लशापंविमोचय ॥ अमृतंस्रावयस्वाहा श्यामातंत्रमुदाहृतम् १७ प्रकाशम् ॰ श्रीह्रींक्रांक्रींक्रेंक्रौं
क्रः सुधारसेश्यामेहृल्लशापंविमोचयामृतंस्रावयस्वाहा इतिमूलम् अथकालरात्रीमंत्रोद्धारः कालरात्रीक
ल्पे मणवंवासनामायामन्मथःकमलोद्भवमितिदोषः १८ मन्मथःकमलातथा वीजंपंचशिरोज्ञेयं ततः
पल्लवमुद्धरेत् ततोमध्येभिधंस्यात्ततःसर्ववशंकुरु २० कुरुनीरंदेहियुग्मंमध्येस्यात्क्राभिधंततः ॥:

वी° शविद्यामंत्रोद्धारकोशंगुणाख्याननामप्रथमः कल्पः ॥१॥ ईश्वरउवाच शृणुदेविप्रवक्ष्यामित्रिपुरांपभिवारितां
५ षट्सखीभिरहंतासांमंत्रोद्धारंब्रवीमिते १ अक्षोभ्यः गुरोविद्यात्रिसंभूतनानाशास्त्रविचक्षण श्रोतुमिच्छाम्यहं
सर्वमंत्रांश्चब्रह्मसिद्धये २ दक्षिणामूर्तिः शृणुक्षोभ्यमहाभागसर्ववक्ष्यामितत्वतः दशविद्याभद्रकालीतुरीचण्डि
न्नमस्तिका ३ दक्षिणाकालिकाश्यामाकालरात्र्यपिसुंदरि षट्सखीनामहंतासांमंत्रोद्धारानुब्रवीमिते ४ तंत्रा
दौभद्रकालीमंत्रोद्धारः उक्तंचश्यामातंत्रे कालीत्रयंकूर्चयुग्मंलज्जायुग्मंचभद्रिका भद्रकालिपदंब्रूयाद्बीजा
निप्रतिलोमतः ठद्वयेनसमायुक्तोभद्रकालीमहामनुः ६ अथचंडिकाबीजानि मुंडमालातंत्रे भद्रिकाभास्व
नीभीमाबीज त्रयमीरितम् ७ असत्यमपरंज्ञेयंब्रह्मवंशैकदीपकं प्रकाशम् क्रींक्रींक्रींहूंहूंह्रींह्रींभद्रका
लिभैंह्रींह्रींहूंहूं क्रींक्रींक्रींस्वाहा इतिमूलम् अथतुरीमंत्रोद्धारः स्वतंत्रे प्रणवंतारकाज्योतिः तामस्थेतेनमडु
तितुर्या मूलमिदंप्रोक्तंस्वतंत्रेशंभुनासमृतम् ८ अथताराकादिबीजोद्धारः कामेश्वरतंत्रे अक्षभंताराकाज्योतिः

कूलचूडामणौ॰ प्रणवंचविभूतिश्च्हृहिरिकांतातथैवच विपच्छन्दमग्नि बीजानिसंयोज्यवाग्भवंततः ८० महदेवंततः
शारांकाबीजंसप्तास्त्रंवदेत् ठद्वयेनसमायुक्तःप्रोक्तोविंशाक्षरोमनुः ८१ प्रकाशं ॐ ह्रीं श्रीं ह्सौं ऐं क्लीं सौः भोऽन्नभ
मवतिहंसस्वरूपिणिस्वाहा इतिमूलं ॥ अथज्वालामुखीमंत्रोद्धारः शारदाटीकायां तारंलज्जाश्रियंचैव मंतिकूर्चंहरं
पयः बीजंचत्र्यक्षरंदेव्याज्वालामुख्याःस्मरेश्वरि ८३ प्रकाशं ॐ ह्रीं श्रींज्वालामुखिममसर्वशत्रून्भक्षयभक्षय
हूंफट्स्वाहा ॥ इतिमूलं ॥ दक्षिणामूर्त्तिः दशविद्यामयाप्रोक्तायथाऽगमविनिश्चिता ८५ साधकेभ्यःप्रदातव्याना
नारत्नविभूषिताः एतासांदशविद्यानांगुणान्वक्ष्यामितत्वतः ८६ दक्षिणामूर्त्तिः मुक्तिंददातित्रिपुरालक्ष्मी
लक्ष्मीर्ददातिच विद्यांददातिवाग्देवीजन्मजन्मान्तरेष्वपि ८७ मातंगीभूतयक्षादिभीतिंहरतिसर्वतः शारिका
शंददात्येवराज्ञीराज्यंप्रयच्छति ८८ ददातिसंततिंभीडाधनंज्वालामुखीतथा दशविद्याःसदाभक्त्याभक्तेभ्योव
रमीप्सितं ८९ प्रयच्छंतिमहादेवि पूजाहोमजपादिभिः ॥ इतिश्रीदक्षिणामूर्त्तिमुनिविरचितेऽद्धारकोशतंत्रेद

बी स्वकृतौ त्रिपुराशिरोमणौ तारं मायां श्रियं कूर्चं सिंधुरं शरस्त्वमेव च ६९ कल्याणं शारिकायास्यां वीजं सप्ताक्षरं स्मृतं अंतेऽस्त्रं
४ भं च विज्ञेयं शारिकामूलमुत्तमं ७० ततः सिंधुरवीजोद्धाराणि उक्तं च वामकेश्वरे० सिंधुरं च गजं घोणा हस्तं च द्विरदं तथा
पुंवीजानि च चत्वारि कृत्रिमाण्यपराणि च ततः आकाशवीजोद्धारः उक्तं च भैरवतंत्रे शून्यं खं भां वरं व्योम अभ्रां वीजं च चतु
ष्टयम् ७२ हकारं चैव विज्ञेयमित्युक्तं रुद्रयामले॥ असत्यमपरं ज्ञेयं तारभक्तिसमन्वितं ततः कल्याणवीजानि अस्मि
न्नेव० कल्याणं चैव शर्मापि शंभुं भं च चतुष्टयम् अनंतं चापरं ज्ञेयं पर्वतेश्वरनंदिनि शर्मवीजो सौः प्रांच प्रकाशं ॐ ह्रीं
श्रीं हूं क्ष्रं भ्रां शां शारिकायै नमः इति मूलम् अथ राज्ञीमंत्रोद्धारः तारं लज्जां श्रियं वाग्निः कामं शक्तिः षडक्षरः वीजं
च षड्विधं ज्ञेयं ततः पल्लवमुद्धरेत् ७६ भगवत्यै तत्तो राज्ञ्यै वांते माया वठद्वयं एभिः सह मनुः प्रोक्तो मंत्रः पंचदशा
क्षरः ७७ ततोऽग्निवीजानि० अग्नी रेफश्च वह्निश्च हुतभुक् हव्यवाहनः रंवीजोद्धारमेतत्तु कृत्रिमं चापरं स्मृतं ७८॥
प्रकाशं ॐ ह्रीं श्रीं रं क्लीं सौः भगवत्यै राज्ञ्यै ह्रीं स्वाहा इति मूलम् इति श्यामातंत्रे अथ भीडामंत्रोद्धारः उक्तं च

भुवनेश्वर्योमनुश्चैकादशाक्षरः ५९ प्रथमंतुबीजानि उक्तंचत्रिपुरार्णवे मंत्रोमनुर्हरस्त्रैवंहनुर्बालंबिंदुर्बुधाः ६०
बीजान्येकानमन्त्रस्यकृत्रिमाण्यपराणिच प्रकाशं ॐ ह्रींश्रीं क्लीं भुवनेश्वर्यैनमः ततोमातंगीमंत्रोद्धारः उक्तंचकूलसिद्धसंतने ततोमाकाले
तथालक्ष्मीर्वागुराद्वयमेवच ६२ चारुकंरसबीजानिवादौप्रोक्तानिशंभुना ॥ अंतेजिह्वातथापद्मंलज्जानीरजमेवच
६३ वसनापंकजंचैववनंप्रोक्तंचशूलिना अथकालीबीजानि कुलचूडामणौ कालीकुंतीरसज्ञापिजिह्वापिरसना
तथा ६४ क्लींबीजानिनयैतानिकृत्रिमाण्यपराणिच अथवागुराबीजोद्धाराणि वागुरभ्वायुपूज्यापिवांतेरापित्रि
बीजकं ६५ श्रीबीजानिशिवेत्रीणिकृत्रिमाण्यपराणिच अथचारुकबीजानि० मुंडमालातंत्रे चारुकंचैववर्वांगो
चारुजोद्भवबीजकं ६६ चतुष्टयंचब्लौंबीजमस्यास्यपराणिच ततःपद्मबीजोद्धाराणि वामकेश्वरे पद्मःपंकजं
पयोजौनीरजंचाम्बुजंतथा ६७ पंचउकारबीजानिकृत्रिमाण्यपराणिच प्रकाशम् ॐ क्रौंश्रींप्रींछ्रीं उच्छिष्टचांडालि
निदेविमहापिशाचिनिमातंगिनिदेविक्लींठःह्रौंठःएंवःस्वाहा इतिमातंगीमूलम् अथशारिकामंत्रोद्धारः उक्तंच०

श्री·यिनि अभिमतं प्रपच्छ सर्वे सर्वगते सुरूपे सर्वदुर्जेयविमोचिनि ह्रीं सः स्वाहा इति मूलं ततः सरस्वतीमंत्रोद्धारः उक्तं च शारदा
३ पटले तारं लज्जां वाग्भवं च परां प्रणवमेव च बीजं पंचशिरो ज्ञेयं मंत्रज्ञैर्योनमइति अथ नमोबीजानि उक्तं चागमालंकारे
नमोविश्वंस्तथास्तंभंचैश्मकंचाश्मरीतथा ४८ अमानिकृत्ति मान्येवं सुरासुरनमस्कृते प्रकाशम् ॐ ह्रीं ऐं ह्रीं सरस्वत्यै
नमः ततः त्रासामंत्रोद्धारः उक्तं च भैरवसर्वस्वे तारं व्योषं तथा कांतामायावाग्भवमेव च ५१ कूर्चं चैव महेशानि क्रांते फट्
हृपंतथा ततो हूंबीजोद्धाराणि उक्तं चागमसिंधौ स्कंदं व्योषं वडिवं च संयोज्य हरमिस्ततः हूंबीजोद्धारमेतद्धि वाग्मिर्दन्न
कं वदेत् ५३ ततः स्त्रींबीजोद्धाराणि॰ वामकेश्वरं कान्ता च कमलाक्षी च प्रियापि परमापि च ॥ लंबापि ललना जाह्न।
त्रिमाराप राणि च ५५ ततः कूर्चबीजोद्धाराणि छिन्ना हस्ये कूर्चं कूलं तटं तीरं वा सत्स्यान्यपराणि च ततः फट्बीजानि
अस्मिन्नेव स्फुट् हृ हं तुरंगं वा स्यात्सत्यं तु सुरेश्वरि प्रकाशं ॐ ह्रां स्त्रीं ह्रीं ऐं हूं उग्रतारे फट् स्वाहा ततो भुवनेश्वरीमंत्रोद्धा
रः उक्तं च कुब्जिकासर्वस्वे प्रणवं च तथा माया कमला मन्मथस्तथा ५८ अंते विश्वं महेशानि नाममध्ये सुरेश्वरि प्रोक्तोयं

तारवराद्गोनिर्बीजानिप्रणवस्पच ३५ अपराणिहासस्यानिमयाप्रोक्तानिपार्वति विपरीततयाप्रोक्ताविद्यात्रीषोडशाक्ष
री ३६ प्रकाशम् श्रींह्रींक्लींऐंसौः ॐह्रींश्रींक्लीं कूं क्लुंसौः ऐंक्लींह्रींश्रीं इतिमूलम् इतित्रिपुरसुंदरीमंत्रोद्धारकोशा
नि अथाहंदशविद्यानांमंत्रोद्धारंब्रवीम्यहम् ३७ आगमार्णवरत्नेस्मिंस्तंत्रेवैरुद्रयामले उक्तंचागमलहर्यां अथ
दशविद्या ॐत्रिपुराश्रीश्चवाग्देवीताराणिभुवनेश्वरी ४० मातंगीशारिकाराज्ञीभीडाज्वालामुखीतथा दशविद्यास्त्वमं
चैताभाषिताःकृत्तिवाससा एतादशैवषडन्यायोजिताषोडशाक्षरी ४१ दशविद्याभद्रकालीत्वविच्छिन्नमस्तिकाम् दक्षि
णाकालिकाश्यामाकालरात्र्यपिसुंदरि ४२ एतासांमूलमंत्रेणयोजितैकाक्षरेणव ब्रह्मादिदैवतैःपूज्याश्रीविद्याषोडशाक्ष
री ततोलक्ष्मीमंत्रोद्धारः उक्तंचरुद्रयामले० हरिणाक्षीपरात्यंतंलक्ष्म्याबीजत्रयंस्मृतं ४४ विपरीततयाज्ञाप्यसत्वरंफल
दायकं क्षमाशंकापिनीरंतुबांतेप्रोक्तंशिष्योत्तम ४५ ॐनमःस्वाहाबीजानि उक्तंचोड्डामरे अपोवनंतथानीरंउद्भूयंचप
यस्तथा ४६ जलेबीजानिप्रोक्तानिषडसस्यान्यन्यानिच प्रकाशं ॐह्रींश्रींलक्ष्मिमहालक्ष्मिसर्वकामप्रदेसर्वसौभाग्यदा

नीवासना २४ ग्रस्त्रंतंतथात्तामालक्ष्मीः शाक्यादिकंततः विपरीततयाप्रोक्ताविद्याश्रीषोडशाक्षरी. २५ अस्योद्धारस्यवक्ष्या
२ मिकोशानिद्विमकाम्यया जगतांसाधकानांचरहस्यंत्रिदिवौकसां २६ अथलक्ष्मीवीजोद्धाराणि उक्तंचङ्किवाराहस्ये ॥
लक्ष्मीपद्माहरिमणाक्षीसरोरुहनिवासीनी २७ कमलारुक्मिणीचैवनारायणप्रियापिच लक्ष्मीवीजानिसप्तैवकृत्रिमाण्य
पराणिच २८ त्रिपुरातिलके इमेहेकमलापद्माहरिकांतातथैवच श्रियोवीजानिपंचैवकृत्रिमाण्यपराण्यिच २९ अथह्रींवी
जोद्धाराणि उक्तंचागमालंकारे परभूतिस्तयालज्जामायापिसकलाकृशा समस्तापितथात्तामाकृत्रिमाण्यपराणिच ३०
ततोमदनवीजानि उक्तंचभैरवतंत्रे कामःपंचेषुरेवंचमदनोमन्मथस्तथा मारःप्रद्युम्नकंदर्पावन्तान्यपराणिच ३१ ततोवा
भववीजानि उक्तंचत्रिपुरासर्वस्वे वाग्भवमूर्द्धवीजंचवारणंवह्निकेश्वरः ३२ चंद्रोपिचमंवसनंवासनापितथैव.. वार्वा
ण्यपिचचर्म..त्रयस्तान्यपराणिच ३३ ततःशक्तिवीजानि उक्तंच छिन्नाशिरोमणौ शक्तिःकर्मापिविज्ञेयेशस्यांके..तथै
वच शक्तिवीजानिचत्वारिकृत्रिमाण्यपराणिच ३४ ततः ॐकारवीजानि प्रणवंच ततस्तारं त्र्यक्षंतोमपित्र्यंबकः त्रासः

सर्वागमविनिश्चितं देव्युवाच देवदेवजगन्नाथभक्तानुग्रहकारक श्रोतुमुद्रात्मकोशाख्यंतंत्रमागमनिश्चितं १५ इच्छामिपरम।
मीसावत्कुरुहंसिपूर्जटे ईश्वरउवाच॰ शृणुपार्वतिवक्ष्यामित्युद्रांत्रिपुरादितः १६ देवीनांदशविद्यानांमंत्रोद्धारमनुत्तमम्
तंत्रमुद्रात्मकोशाख्यंसर्वागमविनिश्चितं १७ सर्वग्रंथ्यादिपूज्यंच तच्छृणुष्वब्रवीम्यहम् तदनुग्रहमात्रेणसर्वानुद्धारसंचया
न् १८ अब्रवीद्दक्षिणामूर्तिस्तुत्रमंत्रोभ्यनामकं शृणुस्वात्रमहाभागदेवीभक्तिसमन्वितः १९ रहस्यंसर्वलोकानांदेवानाम
पिदुर्लभं ईश्वरउ॰ देवितस्मिन्नवसरेशिष्यायप्रियवादिने २० मुनीद्रोदक्षिणामूर्तिरब्रवीद्धृयमुत्तमम् भाषितंपरमुरात्तेनत
त्प्रभावान्महेश्वरि २१ देवीनांदेवतानांचतच्छृणुष्वब्रवीम्यहम् ॐ त्रिपुरस्कंदर्यैनमः ईश्वरउ॰ अत्रादौत्रिपुरसुंदरीमंत्रोद्धा
रः उक्तंचरुद्रयामले ॐ लक्ष्मीःपरएमवन्नवाभवकामशक्तिस्तारंचभूतिकमलाकथितापिविद्या शक्त्यादिकंतुविपरीततया
चप्रोक्ताश्रीषोडशाक्षरविधिःशुभमस्तुपूर्णा २२ उड्डामरेच चैतोदसंभवाभूतिःकामंवाग्भवमेवच शक्तिःप्रणवलक्ष्मीपिल
क्ष्मीःशक्त्यादिकंततः २३ विपरीततयाप्रोक्ताविद्याश्रीषोडशाक्षरी वामकेश्वरेपि हरिणाक्षीतथामायाकामोभामिनि॰

वी॥श्रीगणेशायनमः॥ ॥श्रीएकदास्फाटिकोर्वीभृन्नानौवनसमाकुले संस्थितौपार्वतीशंभूलोकरक्षणतत्परौ पार्वतीपरमेशा
१ मंत्रोबाचवक्तुंहितम् पार्वत्युवाच० देवदेवमहेश्वरश्रेष्ठदयात्रेगुण्यमानस देवीभगवतीदेवमहात्रिपुरसुंदरी अस्मिंश्वरात्वेत्य
कस्तूरेकेनप्रकाशिता ईश्वरउ० शृणुदेविप्रवक्ष्यामिरहस्यंत्वत्कुतूहलात अंवानदेमहापुण्येश्रीगर्भानामसत्पुरी अस्तिवै
लोकविख्यातासर्वभूतलशेखरा ५ तस्यांबभूवविप्रेंद्रदेवगंधर्वसेवितं पुण्यंतपोवनपदंनमावृक्षसमाकुलम् ६ तस्मिंस्त।
पावनेपुण्येसेवितेपिमुनीश्वरैः ऋषिःस्याद्दक्षिणामूर्तिस्तदाधनतत्परः ७ नानाशास्त्राब्धिपूतोभूत्सर्वागमनिधिःशिवे एक
दास्नानुमाप्यानोरेवांपुण्यजलान्विताम् ८ प्राक्पुण्यकर्मणातस्मै तुष्टात्रिपुरसुंदरी जलमध्येस्थितागोप्त्रीमहात्रिपुरसुंदरी०
९ स्वमूलंशिक्षितंदेव्याशुद्धाम्नतमपात्मकम् सत्वरंफलदंगोप्यंसमुनींद्रशिरोमणिः १० तदाप्रभृतितन्मंत्रं ध्यायन्देवि
जपन्हृदि तस्मात्माम्महादेविमंत्रंयंकर्तुंमशेषतः ११ तत्तुमन्हमात्रेणसमुनिःपरपूजितः मंत्रमुद्धारकोशाख्यंचकारमनु
सागरम् १२ अस्यानानाविधांस्तंत्रानुदृष्ट्वात्रैलोक्यपूजिते तदाप्रभृतिदेवेशिप्रसिद्धंभूमिमंडले १३ तंत्रमुद्धारकोशाख्यं

॥ श्रीकाशी। विश्वनाथपुरीमे ढुंढिराजगणेशकेपाश दाऊ अग्निहोत्रीकेयहाँ
सिद्धविनायकयंत्र मेंबिजोहुई कोशछापागया। जिसैलेनाहोयउसे ढुंढिरा
जगणेशकेपाश दाऊ अग्निहोत्री छापावालेकी दुकानपर मिलैगी। चुविन
छा० लि० विशेश्वर उपाध्या० संवत १९२८ मी० चैत्रशुक्ल १२ चंद्रे ॥